

अथ

# चित्तत्वनिरूपणम्

श्री शंकरब्रह्मण्यदेवतीर्थ-
स्वामिभिर्विरचितम्

श्रीमज्जयेन्द्ररायशर्मणा
प्रकाशितम्

गुर्जरदेशस्थ अहमदाबादपत्तने
ज्ञानमंदिरमुद्रालये मुद्रापितम्
१९७४ विक्रमाब्दे ।



अथ

# चित्तत्त्वनिरूपणम्

श्री शंकरब्रह्मण्यदेवतीर्थ-
स्वामिभिर्विरचितम्

श्रीमज्जयेन्द्ररायशर्मणा
प्रकाशितम्

गुर्जरदेशस्थ अहमदावादपत्तने
ज्ञानमंदिरमुद्रालये मुद्रापितम्
१९७४ विक्रमाब्दे ।

॥ रजीस्टर्ड ॥

प्राप्तिस्थानंः— श्रीमज्जयेन्द्ररायशर्मा

एम. ए.

आकाशेठ स्ट्रीट।

अहमदाबाद।

अथवा

गोवर्द्धन मठ, जगन्नाथपुरी।

आवृत्ति १ मा. प्रत ६००

अमदावादमध्ये सांकडीशेरीरोडस्थिते "ज्ञानमन्दिर" मुद्रालये अमृतरायसूनुना शंकररायेण मुद्रांकितम्।



# ॐ तत्सत्

॥ नमः परमात्मने ॥

प्रत्यक् शान्तं मानातीतं ।
कर्म्माध्यक्षं सर्वावासम् ॥
एकं गूढं सत्त्यं नित्त्यं ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ १ ॥

विद्युत्तारा सूर्य्यश्चेन्दु ।
येनाभान्ति स्वस्मिन् सम्यक् ॥
नैतैर्भास्यं सद्भारूपं ।
यच्चित्तत्त्वं तद्ब्रह्माहम् ॥ २ ॥

पाणीपादौ नेत्रेश्रोत्रे।
नोयस्यस्तो गन्त्रादातृ ॥
मुख्यं द्रष्टृ श्रोतृ ज्ञातृ ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ ३ ॥

वायुर्वह्निः सूर्य्यश्चन्द्रो ।
मृत्युश्चैषांभीतिर्यस्मात् ॥
नोभीर्यस्य ज्ञातुर्ज्ञातृ ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ ४ ॥

यस्य श्रीहि र्ब्रह्मक्षत्रं ।
मृत्युर्देवो यस्यस्त्याज्यम् ॥
नेत्थं वेद्यं सर्व न्याप्तं ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ ५ ॥

विद्वद्वेद्यं दोषाबाध्यं ।
बाधाधारं बाधाहीनम् ॥

वोधाविद्धं शुद्धं बुद्धं ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ ६ ॥

अङ्घ्रेरङ्घ्रिर्वाचोवाणी ।
श्रोत्रश्रोत्रं चक्षुश्चक्षुः ॥
घ्राणघ्राणं काष्ठाभूतं ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ ७ ॥

नोयत्पूर्वं नोयत्कार्य्यं ।
न यस्यस्तत्साम्याधिक्ये ॥
नोयद्धोक्तृ प्राणप्राणो ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ ८ ॥

नो यस्यान्तो नो यद्ग्राह्यं ।
नो यस्यादिर्नेयिद् वाह्यम् ॥
नो यद् दृश्यं द्रष्टुर्द्रष्टृ ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ ९ ॥

नाहं देवो नाहं यक्षः ।
नाहं मर्त्यो नाहं रक्षः ॥
नाहं मूढो नाहं दक्षः ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ १० ॥
नाहं विप्रो नाहं क्षत्रं ।
नाहं वैश्यो नाहं शूद्रः ॥
नाहं देही नाहं देहो ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ ११ ॥
नाहम् पूज्यो नाहं भक्तः ।
नाहं भिक्षु र्नाहं रक्तः ॥
नाहं क्षीणो नाहं शक्तः ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ १२ ॥
नाहं जङ्घा नाहं कक्षा ।
नाहं पृष्ठं नाहं वक्षः ॥

नाहं पक्षी नाहं पक्षः ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ १३ ॥

नाहं दाह्यो नाहं दग्धा ।
नाहं वाच्यो नाहं वक्ता ॥
नाहं ग्राह्यो नाहं त्यक्ता ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ १४ ॥

नाहं छेद्यो नाहं छेत्ता ।
नाहं क्लेद्यो नाहं क्लेत्ता ॥
नाहं भेद्यो नाहं भेत्ता ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ १५ ॥

नाहं वेद्यो नाहं वेत्ता ।
नाहं क्रय्यो नाहं क्रेता ॥
नाहं जय्यो नाहं जेता ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ १६ ॥

देवे दैत्ये शुद्धे हीने ।
मन्दे मत्स्ये दीनेऽधीने ॥
तन्त्रे मन्त्रे घस्त्रे रात्रौ ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ १७ ॥
वाह्येऽवाह्ये धाराधारे ।
वह्नौ होमे हेम्नोहारे ॥
सर्प्पे रूप्पे शुक्तौ रज्जौ ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ १८ ॥
रोगे रागे भोगे शोके ।
काके काये योगे लोके ॥
भोग्ये काम्ये साम्येऽसाम्ये ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ १९ ॥
कृष्णे शुक्ले पीते रक्ते ।
लोभे क्रोधे सक्ते भक्ते ॥

बोधे रोधे यागे भागे ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ २० ॥

शस्त्रे छेद्ये शास्त्रे वेदे ।
सारेऽसारे भेदेऽभेदे ॥
पापे पुण्ये ह्रस्वे दीर्घे ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ २१ ॥

शत्रौ मित्रे पुत्रेऽमत्रे ।
वैश्ये विप्रे शूद्रे क्षत्रे ॥
म्लेच्छे वृक्षे कृच्छ्रे छत्रे ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ २२ ॥

नेत्रे रूपे घ्राणे गन्धे ।
श्रोत्रे शब्दे स्पर्शे सङ्गे ॥
हस्ते पादे गुह्ये लिङ्गे ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ २३ ॥

भक्ष्ये भोज्ये लेह्ये चोष्ये।
हृद्ये हार्दे पेये पोष्ये॥
भाष्येऽभाष्ये कार्ये ऽकार्ये।
यच्चित्तत्त्वं तद् ब्रह्माहम्॥ २४॥

माणे बुद्धौ वध्ये वन्धौ।
स्वप्ने सुप्तौ बोधे सन्धौ॥
स्थूले सूक्ष्मे हेतौ पिण्डे।
यच्चित्तत्त्वं तद् ब्रह्माहम्॥ २५॥

आदावन्ते मध्येकाले।
विश्वे स्वाप्ने प्राज्ञे भाले॥
हानौ हेये मुण्डे तुण्डे।
यच्चित्तत्त्वं तद् ब्रह्माहम्॥ २६॥

भस्त्रे भानौ चन्द्रे चारे।
भूमौ नीरे वायौ वारे॥

शङ्के चङ्के तङ्के नङ्के ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ।। २७ ।।

वाले वृद्धे यूनि प्राज्ञे ।
मूढे गूढे मेषे छागे ।।
चण्डे मण्डे गण्डे खण्डे ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ।। २८ ।।

यक्षे पक्षेऽध्यक्षे लक्ष्ये ।
कक्षे दक्षे रक्षो भक्ष्ये ।।
हव्ये कव्ये गद्ये पद्ये ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ।। २९ ।।

मत्ते धूर्त्ते धीरे कीरे ।
चित्ते वित्ते वस्त्रे वीरे ।।
वाद्ये वासे नद्यास्तीरे ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ।। ३० ।।

दाने पथ्ये रथ्या पङ्के ।
शान्ते भ्रान्ते दान्ते रङ्के ॥
नीचे श्रेष्ठे मञ्चे तङ्के ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ ३१ ॥

कूपे वाप्यां पाथः पात्रे ।
कीले सूच्यां शङ्कौ दात्रे ॥
श्लाघ्येऽश्लाघ्ये ग्रन्थे छात्रे ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ ३२ ॥

नाट्ये गेये गाने गाधे ।
माने मेये मोदे बाधे ॥
सिद्धे साध्ये सिद्धौ सङ्घे ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ ३३ ॥

मद्रे क्षुद्रे भद्रे भङ्गे ।
कृष्णे कीटे रामे रङ्गे ॥

सव्ये भव्ये गव्येऽसङ्गे ।
यच्चित्तत्वं तद् ब्रह्माहम् ॥ ३४ ॥

वर्णे पर्णे सर्णे कन्ध्रे ।
विन्ध्ये सिन्धौ गर्त्ते रन्ध्रे ॥
सर्वाभासं साक्षात्साक्षि ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ ३५ ॥

दुग्धं सर्पिर्दग्धं दाहः ।
मेदो मज्जा मुग्धं वाहः ॥
धेनु हस्ती नीरे गाहः ।
माया मोहोऽसत्सन्नाहः ॥ ३६ ॥

भारो भारी भेरी दण्डः ।
बालो वृद्धो भार्य्या पण्डः ॥
धूर्त्तो मूर्खो मत्तो मण्डः ।
कामी वामी लोभी चण्डः ॥ ३७ ॥

ब्रह्मा विष्णुः शम्भुर्गङ्गा ।
गेयं गम्यं गीता नङ्गः ॥
ध्येयं ध्यानं ध्याता भङ्गः ।
द्रष्टा दृश्यं नाट्यं रङ्गः ॥ ३८ ॥

यानं यामस्सायं प्रातः ।
मित्रं पुत्रो माता भ्राता ॥
भानं भास्यं भामा तातः ।
यागोऽध्वर्युः स्तोतोद्गाता ॥ ३९ ॥

रेतः सेकः पोतः पाकः ।
भूमि र्वन्हिः कृष्णः काकः ॥
पाथो वायुर्भेकः शाकः ।
नेयं नेता नीतिर्नाकः ॥ ४० ॥

दानं दाता दृष्टि र्दोषः ।
मानं माता सृष्टि र्मेषः ॥

सूर्य्यश्चन्द्रस्तापस्तोषः ।
खड्गो वीरः कुष्टिः कोषः ॥ ४१ ॥

वेश्या वश्यो विष्टिर्वेषः ।
लेख्यं लेखो रेखामेषः ॥
पिष्ठं पेष्यं पुष्टिः पेषः ।
शाक्यः शाक्तः शक्तिः शेषः॥ ४२ ॥

देहःप्राणश्चित्तंबुद्धिः ।
जीवो विद्या क्लेशाः शुद्धिः ॥
आशा कालो मुक्तिर्वन्धः ।
शब्दो रूपं स्पर्शो गन्धः ॥ ४३ ॥

हस्तौ पादौ मूर्धा केशाः ।
ऊर्ध्वश्चाधो मध्यो देशः ॥
धर्म्माधर्म्मौ मोहावेशः ।
पूर्णो लेशः सृष्टिः सेशा ॥ ४४ ॥

एतत्सर्वं यस्मिंस्तथ्यं ।
भाति स्वप्ने यद्वद् दृश्यम् ॥
सर्वस्यूतं सर्वासक्तं ।
यच्चित्तत्त्वं तद् ब्रह्माहम् ॥ ४५ ॥

एतन्मर्त्यः पाठंपाठं ।
श्रद्धावित्तो नित्यं भक्त्या ॥
दाहं दाहं दोषान् सर्वान् ।
जीवन्मुक्तो ब्रह्माप्येति ॥ ४६ ॥

इतिश्रीमत्परमहंसपरिव्राजकाचार्यगोवर्धनमठाधीश्वरशंकराचार्यश्रीमधुसूदनतीर्थस्वामिशिष्य (पण्डित स्वामि) श्री शंकरब्रह्मण्यदेवतीर्थस्वामिविरचितम् चित्तत्त्व निरूपणम् ।

